मापद्येत यथा प्रश्नवाक्ये प्रमाणशब्दोविशेषपर स्तथोत्तरवाक्येऽपि। कोसौ विशेषइति चेन्न पूर्व्ववदुत्तरत्वात् अत्रापि प्रश्नस्य विशेषोविषयः किं शब्दस्य विशेषशब्देन सामानाधिकरण्यात् तथाच सति विशेषएवोत्तरं स्यात्। स्यादेतत् विशेषशब्देन न विशेषमात्रमनिर्द्धारितमत्र विवक्षितं किन्त्वसाधारणी व्यक्तिस्तत्र विशेषशब्दस्य तात्पर्य्यं तस्मात्का सावधारणी प्रमाणव्यक्तिरिति प्रश्नार्थः तत्र च तादृश्याः प्रमाणव्यक्तेरभिधानमुत्तरं युक्तं नैवम्बिधाः प्रलापा इति नैतदेवं यतोऽत्रापि विशेषइत्येवोत्तरं यथा प्रश्नवाक्यगतस्य विशेषशब्दस्य सर्व्वतोव्यावृत्तस्वरूपायां प्रमाणव्यक्तौ तात्पर्य्यं तथोत्तरवाक्यस्थितस्यापि एवञ्च सति यत्र विषये भवदीयस्य प्रश्नवाक्यस्य तात्पर्य्यं तदेवास्माकमुत्तरवाक्येन प्रतिपादितमिति युक्तमुक्तम् अथ मन्यसे किमिह प्रमाणमिति पृच्छतोऽयमभिप्रायः अत्रार्थेनुमानं प्रमाणमितरद्वेति। अत्राप्यनुमानमित्युत्तरमस्माकं किं तदनुमानमिति चेत्। अयमपि प्रश्नोऽनुमानमात्रविषयः

उत तद्विशेषविषयइति विकल्पय प्रमाणप्रश्न-वदुत्तरं वाच्यमिति। अत्र च संग्रहश्लोकौ। "यथाविधं यं विषयं नियम्य प्रश्नस्य निर्व्वाह्नि परो यथोक्त्या। वाच्यस्तथैवोत्तरवादिनापि तयैव वाचा स तथाविधोऽर्थः। प्रश्नस्य यः स्या-द्विषयः स वाच्यो वाचा तया वैष भवेन्निरुक्तः। इदं त्वयाप्याख्यितमेतयैव गिरा स्वपृच्छाविष-यस्य वक्ता।" प्रश्नार्थश्च किं शब्दाज्जिज्ञासा-विषयतार्थस्य प्रतीयते जिज्ञासा च ज्ञातु-मिच्छा इच्छा च नाज्ञाते भवत्यतिप्रसङ्गात् तस्मादीश्वरविषयं प्रमाणं ज्ञातुमिच्छता तत्र स्वज्ञानमिच्छाकारणीभूतं वक्तव्यं तदयथार्थं यथार्थं वा स्यात् यथार्थञ्चेत् तर्हि तेनैव ज्ञानेन स्वकीयो विषयः प्रमाणमुपस्थाप्यते विषये प्रमाणप्रवृत्तिमन्तरेण तदीययथार्थ-त्वस्य वक्तुमशक्यत्वात्। तेनापि प्रमाणेन स्वगोचर ईश्वरसद्भाव उपस्थाप्यतइत्यनायासे-नैव सिद्धोऽस्माकमीश्वरसिद्धिमनोरथः। अथा-यथार्थं तत्राऽस्मिन्नयथार्थज्ञानविषये यद्यस्मा-भिरयथार्थमेव ज्ञानमुत्पादनीयमिति भवतः

पृच्छतोवाञ्छितं तदा केयं स्वाधीनेऽर्थे परा-
पेक्षा भवानेवायथार्थज्ञानोत्पादनकुशलोयथैकं
तत्र मिथ्याज्ञानमजीजनत्तथा परमप्युत्पादयतु
वयं पुनर्यथार्थज्ञानस्योत्पादयितारोमिथ्याज्ञाने
सर्व्वथैवाकृतिनः किमिह नियुज्येमहीति।
अथ मदीयस्यायथार्थज्ञानस्य योविषयः स
मदीययथार्थज्ञानविषयोभवता क्रियतामिति
त्वदीयं वाञ्छितं तदा व्याघातादोषस्यैवभवतः
प्रवृत्तिरेवानुपपन्ना शुक्तिका रजतत्वेन मम
यथार्थज्ञानविषयोभवत्वित्येतदर्थं पेक्षावान्
कथङ्कारं प्रयतेत येन रूपेणायथार्थज्ञानवि-
षयत्वं तेनैव रूपेण यथार्थज्ञानविषयत्वे व्या-
घातात्। अथ मन्यसे स्वसिद्धान्तमनुसन्धानेन
त्वया यथार्थज्ञानं तत्रोत्पादनीयमतस्तदर्थं
भवाननुयुज्यत इति। मैवम् यदीश्वरसद्भाव-
विषयोभवता प्रमाणाभासः प्रमाणतया भ्रा-
न्त्या प्रतीतः तस्य प्रमाणत्वं अस्माभिर्व्युत्पाद-
नीयमिति नास्माकमीदृशः सिद्धान्तः प्रत्युत
ईश्वरसद्भावविषयं यत्प्रमाणं भवता प्रमाणा-
भासत्वेन भ्रान्त्या प्रतीतमस्ति तत्प्रमाणनीय-

मिति। स्यान्मतम् ईश्वरसद्भावविषयस्य प्रमा-
णस्य भवता ज्ञापनमात्रं क्रियतामित्यभिमतं
पृच्छतामस्माकं ननु प्रमाणेनाप्रमाणेन वेति
विशेषोऽप्यभिमत इति न ज्ञापनमात्रस्याप्रमाण
ज्ञानसाध्यायाप्युपपत्तेः तत्र स्वाधीने केयं परा-
पेक्षेत्याद्युक्तमनुषञ्जनीयम्। स्यादेतत् येय-
मीश्वरसद्भावविषया प्रमाणप्रतीतिरस्माकमु-
त्पन्ना सा व्यभिचारिणी सत्या वेति संशयोऽस्मा-
स्माकं तेनैकपक्षनिर्द्धारणाधीनं यदिदं दूष-
णमवादि भवता तन्निरवकाशमिति नैतदस्ति
एवं हि तस्यां प्रतीतौ यथार्थत्वायथार्थत्वसंश-
येन तस्याः प्रतीतेर्गोचरो यत्प्रमाणं तस्यापि
योऽसौ विषयईश्वरसद्भावस्तत्र सर्व्वत्रैव संश-
यानस्य भवतः प्रश्नोऽयं ननु विप्रतिपन्नस्येति।
स्यात् तथाच स्वीकुरु शिष्यभावं प्रसादय
चिरं चरणशुश्रूषाभिरस्मान् च्छेत्स्यामस्ते
संशयमिति विप्रतिपन्नाएव वयमाहार्य्यः संश-
योऽस्माकमिति चेत् तर्ह्यवधृतैककोटयएव वयं
कार्य्यानुरोधात्तु संशयमात्रस्याभद्दूत्युक्तं स्यात्
एवं तर्हि तदेव कोऽप्यवधारणं भवता यथार्थ-

मयथार्थं वेति विकल्पोक्तानुक्तया दूषणीयम्। एतेनानध्यवसायेन तदस्माभिः प्रतिपन्नमि- त्यपि निरस्तं वेदितव्यं व्यभिचारिविषयमव्य- भिचारविषयं वा तदिति विकल्पाभ्यां तस्यापि ग्रस्तत्वात् परस्परविरोधे हि न प्रकारान्तर- स्थितिरिति न्यायात्।

एवमीश्वराभिसन्धयादावपि तत्तत्स्थाने तिष्ठत्सर्वनामान्तरखण्डनमनुद्रष्टव्यम्।

इति खण्डनखण्डखाद्ये सर्वनामार्थनिरुक्तिः

तृतीयः परिच्छेदः।



## चतुर्थः परिच्छेदः।

ननु तथापि भावात्मके तस्मिन्नीश्वरे विधायकं किञ्चित्प्रमाणं वक्तव्यमिति चेत् किं पुनर्भावत्वं विधित्वमिति चेन्न पर्यायाप्रश्नात्। स्वरूपसत्त्वमिति चेत् अभावस्यापि तथाभावात् प्रतिस्वं व्यावृत्तत्वेनाननुगतत्वापत्तेश्च। अ-

स्तीतिप्रतीतिविषयत्वमिति चेन्न अभावो-
घटस्यास्तीति प्रत्ययसम्भवेनाभावस्यापि तथा-
त्वप्रसङ्गात्। नास्तीतिप्रतीतिविषयत्वेऽपि च
घटादेर्भावनिवृत्तेः। अस्तीति चास्त्यर्थो वा
शब्दो वा विवक्षितः नाद्यः तस्यानिरुक्तेः। सत्ता
तदर्थइति चेन्न सामान्यादीनां तदभावादभावत्वापत्तेः स्वरूपसत्त्वञ्च निरस्तम्। नापि
द्वितीयः अभावोऽस्तीतिप्रतीतेर्निरुक्तत्वात् वर्त्तं
तइत्याद्याकारेण च प्रतीयमानस्याभावत्व-
प्रसङ्गात्। सोप्यस्ति पर्य्यायइति चेन्न उभय-
साधारणैकार्थं निर्व्वचनमन्तरेण पर्य्यायत्वस्य
प्रतिपादयितुमशक्यत्वात्। यत्रैकस्यास्तिपद-
प्रयोगः तत्रैवापरस्य वर्त्ततइति प्रयोगात्।
सामान्येन तावत् पर्य्यायत्वं शक्याधिगममिति
चेन्न प्रमेयाभिधेयादिशब्दानां तथात्वेऽप्यपर्य्या-
यत्वात् यत्नेत्यस्य प्रवृत्तिनिमित्तार्थत्वे च तन्नि-
र्व्वचनप्रसङ्गस्तदवस्थः स एवार्थोऽभावनमुच्यतां
किं शब्दान्तरगवेषणया। अपरप्रतिषेधात्म-
कत्वं भावत्वमिति चेन्न व्यवच्छेद्यासम्भवेना-
परपदवैयर्थ्यात् भावाभावयोः परस्परप्रति-

षेधात्मकतास्वीकाराच्च । तत्रापि भावो नास्ती-
त्यभावप्रतिपत्तिस्तदभावो नास्तीति भावस्याप्र-
तीतिरीति चेन्न तावतापि लक्षणानिरुक्तेः ।
भावस्यपरप्रतिषेधमुखेन प्रतीयमानत्वमेव भाव-
त्वमिति चेन्न चक्षुरादिभिर्भावत्वाग्रहणप्रस-
ङ्गात् । नहि प्रतीयमानत्वं चक्षुरादिग्राह्य
अभावो नास्तीति प्रतीतेर्निर्विषयत्वप्रसङ्गाच्च न
ह्येयं भावविषया भवत्पक्षे परप्रतिषेधमुखेन
प्रतीयमानत्वात् । नाप्यभावविषयैव तन्निषे-
धार्थत्वात् । नैवं प्रतीतिरेव स्यादिति चेन्न
शाब्द्याः प्रतीतेः सम्भवात् आकाङ्क्षादिमद्भिः
पदैः प्रतिस्वं संसर्गबोधनात् अत्यन्तासत्यपि
ज्ञानमर्थे शब्दः करोति हि । प्रत्यक्षप्रतीति
स्तया विवक्षितत्वादयमदोष इति चेन्न सर्वस्य
भावस्य प्रत्यक्षत्वानङ्गीकारात् सेश्वरपक्षे सर्वं
प्रत्यक्षमिति चेन्न तेन तेषामपरप्रतिषेधात्म-
तया ग्रहणे प्रमाणाभावात् । तेषां विधिरूप-
तया तथैव ग्रहणमिति चेन्न विधिरूपत्वस्या-
नवधारणात् । यदपरप्रतिषेधात्मकतया शब्दे-
नापि बोध्यते सत्तावत् भावरूपमिति चेन्न

परपद वैयर्थ्यां तत्त्यागेऽप्यचक्षुषाऽभित्वापत्तेः सुरभि चन्दनमित्यादाविवान्योपनीतभागवत् तत्र वा चाक्षुषत्वं भविष्यतीति चेन्न तथाविधे-नैव विषयेण विशिष्टाया बुद्धेर्विषयविशेषणता-ग्रहे स्वाश्रयोऽप्यंशतः स्यात्। तेनोपलक्षिताया-स्तथात्वे चाभावविशिष्टभावग्रहार्थस्याभावस्य तथात्वापत्तेः। यदेवंविधं तद्भावरूपमिति निय-मानुपपत्तेः। अस्योपलक्षणत्वे चोपलक्ष्यस्या-न्यस्य वाच्यत्वात् अस्यैव भावार्थत्वे चाभावोना-स्तीति कृत्वा प्रतीयमानस्य भावस्य भावत्वाभा-वप्रसङ्गात्। भिन्नञ्च भावत्वं न सम्भवति यत् पदार्थ व्यतिरेक प्रसङ्गात्। यच्च किञ्चिद्भावत्वं तत्स्वात्मन्यस्ति नोवा अस्ति चेदात्मनि वृत्ति-विरोधः नास्ति चेत्स्वस्यान्यप्रतिषेधमुखेन चा-प्रतीयमानस्याभावत्वप्रसङ्ग इति।

नन्वेवमीश्वरे प्रमाणानुपदर्शनात्तदभाव एवापद्यत इति चेत् अभावत्वं किमधीयते निषेधात्मकत्वमिति चेत् तद्यदि प्रतिक्षेपा-त्मकत्वं तदा भावेऽप्यस्ति भावाभावयोर्द्वयोरपि परस्परप्रतिक्षेपात्मकत्वस्वीकारात्। अथाभा-

त्वमेव तदा न निवृत्तः पर्य्यनुयोगः एतेन
नषेध मुखेन प्रतीयमानमिति निरस्तम्।
ावविरोधित्वमिति चेन्न सर्व्वभावविरोधित्वं
द्विशेषविरोधित्वं वा। नाद्यः असिद्धेः नहि
टाभावोभूतत्वादि विरुणद्धि। न द्वितीयः
ावानामपि केषाञ्चित्तथाभावात्। अथास-
ानवस्थानं विरोधो विवक्षितः स भावानां
ास्तोति चेन्न गोत्वादौ तस्यापि भावात्।
एकविधावन्यनिषेधः स इति चेन्न भेदे विरो-
विभावभेदयोरेव प्रसङ्गात्। एकविधिरेवा-
परनिषेधः स इति चेन्न निषेधस्याभावार्थत्वे
भावार्थत्वे चासिद्धेः। नास्तीति प्रतीयमानत्व-
मिति चेन्न घटाभावोनास्तीति घटस्य तथा-
प्रतीयमानतया अभावत्वापत्तेः अस्तीति भावत्व
निरुक्तौ यदुक्तं दूषणं तदापत्तेश्च। प्रतियो-
गिनिरूपणाधीननिरूपणत्वमिति चेन्न प्रति-
योगिनः परार्थत्वेऽतिप्रसङ्गात् विरोध्यर्थत्वे
वेदनिरुक्तेः असदर्थत्वे नञर्थस्यासिद्धेः
अतीतानागतज्ञानादौ विषयादिनातिप्रस-
ङ्गात्। यच्च किञ्चिदभावस्य लक्षणमुच्यते स

भावोऽभावो वा स्यात्। नाद्यः भावस्याभावानाश्रितत्वात् विषयिधर्म्मेण च कथमपि तथात्वे तन्निर्व्वाच्यं स्यात्। अन्यदेव तद्वदिति चेन्न तद्वद्भावस्याभावत्वे स्ववृत्तिः भावत्वे च व्याघातात्। न द्वितीयः तस्यात्मनि वृत्तौ विरोधापत्तेः अवृत्तावव्यापकत्वप्रसङ्गादिति। प्रतिक्षेप्यविशिष्टमेव यत् प्रतिभाति सोऽभावइति चेन्न प्रतिक्षेप्यानिरुक्तौ प्रतिक्षेप्यानिरुक्तेः विशिष्टपदार्थस्य निर्व्वचनीयः स्यात् तत्र विशिष्टं विशेषणविशेष्यतत्सम्बन्धेभ्यो भिन्नमभिन्नं वा। नाद्यः दण्डपुरुषसम्बन्धमन्तरेण दण्डिनोऽन्यस्याप्रतीतेः दण्डिनमानयेत्युक्ते तदनयनप्रसङ्गाच्च। तत्सम्बन्धेनोपलक्षितत्वात्तथेति चेन्न अतद्रूप उपलक्ष्यत्वेऽतिप्रसङ्गात्। तद्वतस्तदन्यत्वात् सम्बन्धो हेतुः स च तदधिकरण एवेति चेन्न सम्बन्धात्तदधिकरणसम्बन्धान्यत्वापत्तेरित्येष न पन्थाः। तत्सम्बन्धिनि तत्र व्यवहारइति चेन्न तस्यापि विशिष्टत्वेनान्यत्वापत्तौ व्यवहारविषयगतविशेषस्य वक्तुमशक्यत्वात्। एवं परम्पराकल्पनायामप्यन-

वक्षामात्रं नतु व्यवहार्य्यगतोविशेषः कश्चित् । द्वितीये तु प्रत्येकं दण्डिव्यवहारप्रसङ्गोविशेषा भावात् न ते प्रत्येकं दण्डिपदार्थाः किन्तु मिलिताइति चेत् मिलिताइति किं ते च मेलकं चाभिधीयते उत तेभ्योऽन्यएव कश्चित् आद्ये प्रत्येकं सएव प्रसङ्गः मेलकेप्यधिकः । द्विती यस्तु प्रतीतिव्यवहारविरोधात्पूर्व्वंनिरस्तः। एक ज्ञानारूढो वा अविरलनानाज्ञानारूढोवाने-कस्य सम्बन्धस्य विशिष्टपदार्थइति चेन्न घटपटा-विति बुद्ध्यावारूढौ घटपटौ सम्बन्धस्य घटपट-रूपोविशिष्टः स्यात् । घटत्वपटत्वसम्बन्धानां तद्‌बुद्ध्यावारूढानामभ्युपगमेन सम्बन्धस्यापि तद्‌बुद्ध्या-रोहोपगमध्रौव्यात् अन्यथा घटत्वविशिष्टरूपो घटः पटत्वविशिष्टरूपश्च पटः कथमभ्युपेयस्तत्र। नच घटपटावित्यपि विशिष्टमेव स्वतन्त्रयोः घटपटयोः परस्परासम्बन्धयोस्तत्र व्यवहारात् न पुनर्यथा दण्डी पुरुषस्तथा घटी पटः पटी-घटइति वा तत्र व्यवहारः । न चैकज्ञाना-ध्यारूढतैव तयोर्न्न मन्तव्या यतोघटपटाविति द्वित्वं तयोस्तद्‌बुद्ध्यावगवाहिना कथं विज्ञानेना-

वगाह्येतेति प्रत्यभिज्ञाप्रस्तावोक्तान् दोषा ना-ह्वास्यामः । अत एवाविरलनानाज्ञानारूढ़तापि विशिष्टता निरवकाशा अथाप्रकाशमानासम्बन्धोऽनेक एकबुद्ध्यारूढ़स्तथा नचैवं घटपटौ तत्कथमुक्तदोषापत्तिरिति चेन्न अप्रकाशमानोऽसम्बन्धोययोरित्ययमप्यर्थो विशकलितइति घटत्वपटत्वव्यत्ययादिवैशिष्ट्यमपि तत्र भज्येताविशेषात् । अथ धर्म्मधर्म्मिसम्बन्धाः स्वतन्त्रा एवैकबुद्ध्यारूढास्तथा नच घटपटौ धर्म्मधर्म्मिरूपावित्यनतिप्रसङ्गइति चेन्न धर्म्मत्वस्यैकस्य दण्डादिगुणादिसाधारणस्य वक्तव्यत्वापातात् । सोऽप्येष्टव्य इति चेत् इष्यतां परं तस्यापि वालुकावद्विशकलितस्योपगन्तव्यत्वेन धर्म्मैरवं किन्न धर्म्मः स्यात् । तथाप्रतीत्यभावान्न स्यादिति चेन्न त्वदुक्तैकप्रतीत्यारोहस्याविशेषे प्रतीतिरपि तथा किन्न स्यात् मास्तु धर्म्मत्वमनुगतं तत्तद्रूपादिपदार्थस्वरूपमेव तथा किञ्चित्त्वं यत्तदेव धर्म्मिणा सम्बन्धेन च समनेकबुद्ध्यारूढं विशिष्टं नान्यदिति चेन्न तेषां स्वरूपाणां भेदेन नानाभूतेषु विशिष्टेषु अनु-

गता विशिष्टबुद्धिर्न स्यात्। सम्बन्धमपि तर्हि विलुप्यैवं स्वभावादेव रूपादिकं नयाधिय-साधत्ताम् एवमपि किन्न स्यादिति चेत्तर्हि वराके धर्म्मेऽपि विलुप्यतां यथा विना सम्बन्धं विशिष्टबुद्धौ रूपादिस्वभावसामर्थ्यात् समर्थिता तथा विना धर्म्मिसमर्थ्यास्थिति जितं जिनैः स्यादप्येवं यदि शुक्ल इत्येतावन्मात्रमेव प्रतीयेत किन्तु शुक्लः शङ्ख इत्यादिना प्रत्ययेन सामा-नाधिकरण्यमुल्लिखता धर्म्मस्थानीय दीयत-इति चेन्न शङ्खत्वजातेरपाभेव्वा रूपादेरवि-रलताद्दगवस्थितस्य वा स्वरूपवैलक्षण्यमेव तत्पदेऽभिषिच्यतां येन विनाप्यधिकरणं सा-मानाधिकरण्यव्यवहारः स्यात्। किञ्च नैता-वन्मात्रं बुद्धिमादाय तदर्थगतवैचित्र्यान्तरख-ण्डने बुद्धिरेव स्वकारणसामर्थ्यात्तयोर्व्यिता तत्तद्व्यवहारप्रसविनी स्वीकियतां कृतमर्थ-व्यसनेन तस्मात् "प्रत्येतव्यस्य वैचित्र्यं प्रत्य-योल्लेखसाचिकं। धियं निवेश्य लुम्पङ्गो भङ्गं साध्येव यच्छति।,, यत्तु केनचिदभावस्य स्थाने तन्मात्रधीरभिषिक्ता तत्तस्य परमुचितं।

"गुरुर्द्विर्यमभावस्य स्थाने स्थानेऽभिषिक्तवान्।
प्रसिद्ध एव लोकेऽस्मिन् बुद्धबन्धुः प्रभाकरः।,,
अपि चैकबुद्ध्यारूढोनेकस्य सम्बन्धस्य विशिष्ट-
इति पक्षे योप्येवं रूपवैलक्षण्यभाग्विशिष्ट इति
कथ्यते सोप्ययं विशिष्टोऽविशिष्टाद्वैलक्षण्येन
बोध्यमानो ज्ञानमन्तर्भाव्यैव स्यादिति तत्र
तत्रापि ज्ञानान्तरनिवेशने अनवस्था क्वचिद
निवेशे तदभावादविशिष्टत्वे शेषस्यामूलमवि-
शिष्टत्वाघातः। तद्योग्यस्तथेति चेन्न तर्हि
योग्यतापि तद्विशेषणं वालुकावदसंलग्नाति-
प्रसञ्जिकैवेत्युक्तमावर्त्तते। एवमेकमिति ज्ञान-
मित्यारूढमित्यादिद्वारैरपि द्रष्टव्यम्। तथाहि
"अविशिष्टाद्विशिष्टस्य वैशिष्ट्यं यदि धीर्वि-
शेत्। तद्बुद्धिधाराविश्रान्तिः स्याद्वा मूलावि-
शिष्टतेति,, विशिष्टनिरासेन च सर्व्वाणि
लक्षणानि निरस्तानीति मन्तव्यं यथा गुणा-
श्रयो द्रव्यमित्यादि। इतोऽपि गुणाश्रयो द्रव्य-
मित्यसङ्गतं तथाहि कथमेतल्लक्षणमवधार-
णीयं संख्यारूपगुणवत्तया रूपादेरपि प्रतीतेः।
भ्रान्तिरसाविति चेत् पृथिव्यादौ कथमभ्रा-

न्तिरिति वक्तव्यं तत्र बाधकाभावादिति चेत् तुल्यं गुणस्य गुणवत्तायां बाधकमस्माभिरवश्यं वक्तव्यं निर्गुणा गुणाइतिसिद्धान्तादिति चेन्न रूपादेर्गुणत्वस्यैव निश्चेतुमशक्यत्वात् । सामान्यवान् गुण इत्यादिगुणलक्षणयोगात्तन्निश्चय इति चेन्न अगुण इति गुणलक्षणांशस्यासिद्धेः संख्यावत्तया प्रतीतेर्विद्यमानत्वात् । भ्रान्तिरिति चेन्न परस्पराश्रयप्रसङ्गात् संख्यावत्तया प्रतीतेर्भ्रान्तित्वे गुणलक्षणसिद्धिः तत्सिद्धौ च बाधेन भ्रान्तित्वस्थापनं । नच हेत्वन्तरा रूपादेर्गुणत्वसिद्धौ बाधकसिद्धिः दृष्टान्तस्यापि संख्यायोगिप्रत्ययाक्रान्तत्वेन प्रसक्तद्रव्यकोटिप्रवेशतया गुणत्वेनासिद्धेः । संख्यायाः संख्यावत्वेनानवस्थाप्रसङ्गान्निःसंख्यत्वव्यवस्थितौ दृष्टान्तत्वं सम्भविष्यतीति चेन्न पृथक्त्वेनापि तस्याः सम्भावितद्रव्यकोटिप्रवेशत्वात् एवं पृथक्त्वस्यापि संख्यावत्त्येति जातीतरानाश्रयोऽकर्मरूपोगुणइत्यपि न जातिव्यापकत्वात् जातिमात्राश्रयइत्येवार्थइति चेन्न अभावाश्रयतया सर्व्वाव्यापनात् । जातिमात्रमात्राश्रयइति

चेन्न उपाधीनमपि तदाश्रितत्वात् नोपाधी-
नामाश्रयो रूपादिः किन्तु कथमपि सम्बन्धी
तावतैवानुमानादिप्रवृत्तिरिति चेन्न उपाधि-
सम्बन्धं प्रत्याश्रयत्वस्य मन्तव्यत्वात् अन्यथा
यदि किञ्चिद्रूपमत्र नेष्यते तदा सामान्य-
विशेषानुमानं तत्र न स्यात्। व्यधिकरणयो-
र्गम्यगमकभावानभ्युपगमात् तस्माद्यदेतदेव
लक्षणं तत्तावन्न जातिरूपं तदिदं रूपं यदि
रूपादौ नास्ति तदानीमस्ति यद्यस्ति तदा
नास्तीति विचित्रेण लग लगेत्युक्ते न लगति
मा लगेत्युक्ते च लगतीति प्रवह्लिकामनुकरोति।
अपि च गुणाश्रय इत्यत्र कस्याश्रयार्थः समवा-
यीति चेन्न गुणत्वादेरपि द्रव्यत्वप्रसङ्गात् गुणा-
वच्छिन्नस्य समवायस्य गुणत्वेऽपि विश्रान्तत्वात्।
गुणः समवेतो यत्र स गुणसमवायीति विव-
क्षितमिति चेन्न यत्रेत्यस्याधिकरणार्थस्याद्या-
प्यनिरूपणेन तेनैव तद्व्याकारानुपपत्तेः। इहेति
प्रत्ययहेतुराधार इति चेन्न इह शङ्खे पीतिमेति
प्रत्ययाच्छङ्खस्य पीतगुणाधिकरणत्वप्रसङ्गात्।
भ्रान्तिरसौ यथार्थस्य प्रत्ययोऽत्र विवक्षितइति

चेन्न तदर्थासत्त्वनिरूपणस्यातिदेकेण तदप्र-
माण्यस्य बोद्धुमशक्यत्वात् न बाधापीहेति
प्रत्ययस्यार्थः प्रतीतो यत्प्रतियोगिकमसत्त्वं तत्र
निरूप्यते पीतत्वं प्रतियोगि तच्च क्वचित्सिद्ध-
मेवेति चेन्न तस्य प्रमितत्वादेवासत्त्वानुपपत्तेः।
तत्र न तस्य प्रमितत्वमिति चेन्न तत्रेत्याधार-
त्वानिरूपणादिति। एतेन समवायिकारणं
द्रव्यमित्यपि लक्षणं निरस्तम्। कथं निर्णेत-
व्यमिदं समवायिकारणमिदं नेति रूपादौ घ-
टादौ च संख्यासमवायिकारणत्वमुक्तेस्तुल्यत्वात्
संख्यैव रूपादौ नास्तीति चेत् घटादौ कथमस्ति
प्रत्ययस्योभयत्रापि तुल्यत्वादित्युक्तमनुसन्धनी-
यम्। द्रव्य एव संख्यास्वीकारे तत्सम्बन्धात्
गुणेऽपि तद्व्यवहारोपपत्तौ कल्पनालाघवात्
गुणे संख्याद्यस्वीकार इति चेत् विपरीतमेव
कुतो न स्यात् सत्तासामान्याद्यपि गुणादौ
किमर्थमङ्गीक्रियते द्रव्यद्वारैव तत्र व्यवहारो-
पपत्तेः। ननु सामान्यार्थ एव कः तथाहि अनु-
वृत्तप्रत्ययकारणं सामान्यमिति न लक्षणं
सामग्र्याः सर्व्वकार्य्योत्पत्तेः तया तदेकदेशा-

न्तरैश्च व्यभिचारात् । असाधारणविशेषणा-
दनन्यजातीयप्रयोजकत्वञ्च तदिति चेन्न स्वसा-
मग्ग्रामपि प्रसङ्गतादवस्थ्यात् भेदप्रतिपत्त्यादा-
वपि प्रयोजकत्वाच्च । एतत्प्रतिपत्तिप्रमाणक-
त्वमिति चेन्न स्वसामग्ग्रामप्यस्याः प्रमाणत्वात्।
एतदेक प्रमाणकत्वमिति चेन्न अर्थ क्रियाभेदा
दैरपि तत्प्रमाणत्वात् एतत्प्रमाकत्वमिति चेन्न
तद्विशिष्टस्यापि तत्त्वप्रसङ्गात् । तदवच्छिन्नप्र-
मांशप्रमाकत्वमिति चेन्न तदसिद्धौवासिद्धेः ।
इयं प्रतिपत्तिर्येन विना नोपपद्यते तत्त्वमिति
चेन्न कारणान्तराणामपि तथात्वादिति। अनु-
वृत्तं सामान्यमित्यपलक्षणम् किमिदमनुवृत्त-
त्वम् अनेकाश्रितत्वमिति चेन्न अवयविना संयो-
गादिभिश्च व्यभिचारात् नित्यत्वे सतीति चेन्न
समवायेन व्यभिचारात् अतएव न बहुवृत्ति-
त्वमित्यपि। असम्बन्धत्वे सतीति चेन्न अणु-
भिर्व्यभिचारादिति। नित्यत्वे सत्यनेकसमवेतं
सामान्यमिति चेन्न विकल्पासहत्वात् । एत-
ल्लक्षणं नित्यमनित्यं वा स्यात्। नाद्यः स्वात्मनि
वृत्तिविरोधात् विशिष्टप्रविष्टमपि हि नित्यत्वं

नित्यमेव । नापि द्वितीयः सामान्यस्य समवायस्य च नित्यत्वाभावप्रसङ्गात् । आत्मत्वादौ व्यक्त्यभावापन्नस्यापि विशिष्टाभावस्यासम्भवात् तस्य कदाचिदसत्त्वानङ्गीकारे तदनित्यत्वस्य वक्तुमशक्यत्वात् तद्ग्राहिणस्य प्रत्ययस्यैककालिकस्य मिथ्यात्वे अविशेषात् सर्व्वकालिकस्य मिथ्यात्वप्रसङ्गेन सर्व्वथा तदसत्त्वापत्तेः । एकस्य च सत्यत्वे अविशेषात् सर्व्वसत्यतायां कदाचिदपि तदसत्त्वं नास्तीति । एकदा तत्सम्बन्धेनोपलक्षितस्यान्यदापि विद्यमानत्वात् तथात्वमिति चेन्न न तादृशोपलक्ष्यासम्भवात् व्यक्तीनां भेदादित्यनित्यत्वानुपपत्तिरिति एतेन नित्यत्वमन्यत्रापि प्रतिवचनीयमिति। के चानेन लक्षणेन व्यवच्छिद्यन्ते । विशेषादय इति चेत् विशेषाएव के ऽभिधीयन्ते तत्र नित्येष्वेव द्रव्येष्वेव वर्त्तन्तएव ये ते विशेषा इत्यलक्षणम् आत्मत्वादिना व्यभिचारात् नित्यान्तरे असत्त्वान्न तत्सर्व्वत्र नित्ये वर्त्तते विशेषास्तु नैवं वर्त्तन्तएवेति नियमादिति चेन्न प्रतिविशेषमव्याप्त्यालक्षणत्वात् । यज्जातीयएवमिति लक्षणार्थइति

चेन्न जातेरनङ्गीकारात् । जातीयत्वस्यात्यदादुपाधिरेव तथा विवक्षितइति चेन्न तस्येतरव्यावृत्तस्यावगतौ व्यर्थमिदं तदुपजीविलक्षणं अतएव विजातीयव्यावृत्तिप्रतीतेः इतरव्यावृत्तस्य वानधिगतौ लक्षणस्य दुरवधारणत्वापत्तेः इतरव्यावृत्ततया तज्जातीयत्वस्याप्रतीतेः। भवतु सएवोपाधिर्लक्षणमिति चेन्न तस्यानिरुक्तेः अतोद्रव्यनित्यव्यक्तिषु निम्नव्यावृत्तधीर्योगिनां सविशेषइति चेन्न स्वरूपधर्मव्यक्तिभेदेष्वपि प्रसङ्गात् अन्यथा कार्यद्रव्यगुणादिव्यक्तिषु सा तेषां कुतः स्यात् तास्विव वैधर्म्यान्तरस्य नित्येष्वपि सम्भवात् विशेषवत्सम्भवेन लक्ष्यासिद्धिरिति । अपि च विशेषादिभ्योविशेषलक्षणादेर्भेदात्कथं तत्र तत्रैव तैर्विशेषादिव्यवहारः क्रियतां नान्यत्र । सम्बन्धोनियामकइति चेन्न सम्बन्धस्यापि सम्बन्धान्तरेण नियामकत्वेऽनवस्थापातात् अन्यथात्वनियमात् तदनिरुक्तेश्च तथाहि कः सम्बन्धशब्दार्थः समवायादयइति चेत् सत्यं किन्तु केन निमित्तेनेति हि प्रश्नवाक्यतात्पर्यं प्रतिस्वं व्यावृत्तेन संयोगत्वादिनान्येन वा ।

आद्ये अनुगतव्यवहारानुपपत्तिप्रसङ्गः अ-स्तिचासाविन्द्रियार्थसन्निकर्षोत्पन्नत्वादिप्रत्यचः नित्यं प्राप्तिः समवायइत्यादि। न द्वितीयः तस्यैकस्यासम्भवात् नियामकत्वं तदिति चेन्न स्वभावस्यापि भवता नियामकत्वाङ्गीकारात्। तथाविधः सोऽपि सम्बन्धएवेति चेन्न त्वया सर्व्वस्वभावनियन्तृताया अवश्याभ्युपगन्तव्यत्वेन नियामकानिर्द्धारणसम्बन्धादधिकाश्रसामर्थ्या-पत्तेः। नियमस्य च स्वस्यानतिप्रसङ्गे नियामकत्ववाचोयुक्त्यनुपपत्तेः। अतिप्रसक्तत्वे च तस्यैव नियामकत्वादतिप्रसक्तेन नियमा-योगात् भूत्वा नियमकरणे च प्रागनियतत्वा-पत्तेः एवमन्येनापि जन्यनियमे अन्यदपि हि यदि पूर्व्वं घटादिरूपेणानियतमेव घटादि करोति तदा पटाद्यपि तथा कुर्यात्। न घटादित्वे नियन्तृत्वमस्य किन्तु घटादेः काल-विशेषयोगइति चेन्न यदि नासौ घटादिकाल-विशेषयोगितानियतमिष्यते तदा पटादिका-लविशेषयोगमपि तथा कुर्यात्। तस्मात् "यदि कुर्य्यादसत्कालानियतं नियतं परः

तत्स्यादतिप्रसक्तत्वमन्यथा चानियन्तृतेति,, कार्य्यकारणयोः कालभेदान्नियम्यनियामकत्वोपगमे उत्तरोत्तरेण पूर्व्वपूर्व्वनियमः किन्नस्यादित्यविनिगम्यत्वापत्तिः। प्राचोत्तरस्य नियमे प्राचएव न तेन किम् अनाद्यनन्तयोर्नैवं विनिगन्ता प्रवाहयोरिति अभूत्वा च करणे व्याघातात् सम्बन्धिनश्चाधारत्वात् सम्बन्धस्याधेयत्वात् तस्यैव तदाधारत्वानुपपत्तेः नहि सुशिक्षितोऽपि नटवटुः स्वं स्कन्धमारुह्य नृत्यति नाप्यन्यस्यासौ सम्बन्धस्तथैव तथानभ्युपगमात्। स्वभावादेवायमीदृगिति हि स्वभाववादः तत्र परस्य नियमनाभावात् कथं परः सम्बन्धी सङ्गच्छते। यत्र किञ्चित्सम्बन्धत्वमभिधीयते तत्समवायेऽपि स्वीकार्य्यं नच समवायाधारत्वं द्रव्यादिषट्कस्य सम्भवति। नचोपाधिभावात् स्यात् संयोगसमवायासम्भवात्। स्वभावसम्बन्धस्य च निरस्तत्वात्। नचासावभावोऽपि प्रतिषेध्यप्रतियोगिभावभेदाभिधानप्रसङ्गात्। सप्तपदार्थीपरिसमाप्तञ्च जगतपरस्परविरोधेनातन्त्रजगव्यवस्थापनादिति। यदपि नियम्यात्

भिन्नं नियामकं तदपि कथं तदेव नियमयति नान्यदिति तदाधारत्वादिति चेत् कः पुनराधारार्थः यत्र स्थीयते तदिति चेन्न यत्रेति सप्तम्यर्थस्यापि विवेचनीयत्वात्। इहेति प्रत्ययविषय इति चेन्न तत्रेति प्रत्ययविषयस्यानाधारत्वप्रसङ्गात्। किञ्च प्रत्ययविशेषावगमो विषयविशेषावगमात् विषयस्य विशेषावगमश्च प्रत्ययविशेषावगमादिति व्यक्तमन्योन्याश्रयः। समवायीति चेत् शशे शृङ्गाभावः कुण्डे बदरमित्याद्यव्याप्तेः। गौणस्तत्र प्रयोग इति चेत् नैतावन्मात्रं प्रत्ययस्य भ्रान्त इत्यपि वक्तव्यमवशिष्यते भवतः। ओमिति चेत् अथ विपरीतमेव कुतो न स्यात् शशे विषाणं नास्तीति च यदि विशेषणाभावाधिकरणप्रतीतिर्भ्रान्ता शृङ्गस्य तर्हि शशोऽधिकरणं स्यात् भावाभावयोरन्यतरनिषेधस्यान्यतरविधिपर्य्यवसायित्वेनाभ्युपगमात्। पतनप्रतिबन्धकमधिकरणमिति चेन्न अवयविनं गुणादिकञ्च प्रति तदभावात्। अव्यवहिताधःस्थितमिति चेन्न गुणाद्यपेक्षया गुणवदादेरधःस्थितत्वे प्रमाणाभा-

वात्। अविशेषेण वाच्यविगुणादीनाम् अव-यवाधारत्वप्रसङ्गात्। ऊर्द्ध्वस्थितस्य संयोगिनः संयोगं प्रति च तदभावात् सूत्रालम्बितद्रव्यादौ बहुलं व्यभिचारात्। यद्येकोऽधिकरणार्थो नोपपद्यते तर्ह्यन्नमस्यार्थवद्भिन्न एवास्त्विति चेत् आश्रयासिद्ध्यादेर्भेदप्रसङ्गात्। सोऽपि स्वीकार्य्य इति चेन्न असिद्ध्यादिविध्यपरिगण-नस्य व्यवहारतोऽन्यथाभावप्रसङ्गात्। क्वचिदा-श्रयस्य समवायित्वात् क्वचिन्नाभावं समवायञ्च हेतुं प्रति तदसम्भवात्। एकस्य च तेषामुप-संग्राहकस्य वक्तुमशक्यत्वात् बहव एवाश्रय-शब्दार्थाः आश्रयासिद्ध्यादयोऽपि पृथक् पृथगेव बहवः। असिद्धभेदपरिगणनग्रन्थोऽप्यन्यथा-कारं योद्धव्योबाधदर्शनादिति चेन्न तथापीह कुण्डे बदरमित्यत्र क आधारार्थ इति वक्तव्यं न तावत्पतनप्रतिबन्धकत्वं सहैव कुण्डेन पतति बदरे तदसम्भवात्। नापि संयोगित्वं वैपरी-त्यस्यापि प्रसङ्गात् संयोगित्वे सत्यधःस्थितत्वं तत्राधिकरणार्थ इति चेन्न तस्मिन् सत्यप्यन्यत्र चरणतलमिलितभूलीपटलादावधिकरणप्रती-

त्यनुत्पत्त्या प्रत्युत चरणतले धूलीत्येव प्रतीत्या आधारत्वप्रतीतौ प्रकृतेऽपि व्यभिचारित्वेन तथा स्वीकारानुपपत्तेः न सार्व्वत्रिकोऽयमाधारार्थः किन्तु क्वाचित्को नानारूपाधारत्ववादिपक्ष इति चेन्न भवत्वन्यत्रान्यस्याधारार्थत्वम् अस्य त्वाधारार्थत्वं नोपपद्यते अनाधारप्रतीतिविषयेऽपि गतत्वादित्युक्तेः । आधेयापेक्षयामहत्परिमाणत्वे सतीति चेन्न करतलस्थिततूलराश्यादौ तदसम्भवात् अन्यस्य च वक्तुं तत्राधारार्थस्याशक्यत्वात् अधःशब्दार्थस्य च वक्तुमशक्यत्वात् पतनाभिमुखदिक्स्थितत्वमिति चेन्न पतनार्थस्य गमनाधिकस्याधःशब्दव्यतिरेकेण निर्व्वक्तुमशक्यत्वात् । अतएवाधःशब्दार्थस्य दुर्व्वचत्वमविगम्याद्वैतवादिना गुरुणा शिष्याय खण्डनमुपाचक्षाणेन भगवता पराशरेणाभिहितम् । "अधःशब्दनिगद्यं किं किञ्चोर्द्ध्वमभिधीयते ।,, पृथ्व्यभिमुखी दिगधःशब्दार्थ इति चेन्न ऊर्द्ध्वशब्दार्थस्यापि पृथिव्यभिमुखत्वसम्भवात् । यदपेक्षया पृथिव्यभिमुखी यादिक् तदपेक्षया साध

इति चेन्न यदपेक्षयेति किं यमवधी-कृत्येति विवक्षितम् उत यदीयाभिमुख्य-व्यवस्थितेति। आद्ये पृथिव्यूर्द्ध्वस्थितं पदार्थ-मवधीकृत्ययोर्द्ध्वा दिगिति भवद्भिर्व्यवह्रियते सापि पृथिव्यभिमुखी भवतीति साप्यधः स्यात्। अतएव न द्वितीयोऽपि यस्यां दिग्यिक्रितया पृथ्वी सन्निहिता भवति सा दिगध इति चेन्न कूपादौ मध्यगतस्य दिर्य्यग्दोलायमानस्य क्रिया पतनं स्यात् तद्गत्याक्रान्ता च तिर्य्यग्दिगधः स्यात् पृथिवीमवधीकृत्य यच्चान्यं पदार्थम् अव-धीकृत्य यो मध्य इति देशो व्यवह्रियते स पृथिव्यतिरिक्ततदवध्यपेक्षया अध इति चेन्न पृथिव्यामेव तद्व्यवहारापत्तेः। पृथिवीं पदा-र्थान्तरञ्चापेक्ष्य मध्यत्वस्य विवक्षितस्याधः शब्दार्थप्रदर्शनमन्तरेण निर्व्वक्तुमशक्यत्वात्। पृथिव्यपेक्षयोर्द्ध्वं परापेक्षया चाधः तत्र तयो-र्मध्यमित्येवं निरुच्यते मध्यत्वम् अन्यथा तिर्य्य-गपि प्रसङ्गात्। तद्यथा पृथिव्यपेक्षया पूर्व-मपरापेक्षया च पश्चिमं तयोर्म्मध्यमुच्यते प्रती-पदिगवस्थितयोः परस्परापेक्षया प्रतीपदिक्-

सङ्करे सत्यव्यवहारात्। अथान्यः कश्चिदाधारार्थोऽस्तु प्रतीतिसिद्धत्वात्प्रतीतेश्चैवम् अनन्योपपाद्यत्वात्। नैवम्। तदनित्यं वा स्यात् नित्यं वा। नाद्यः तदभावे आधारप्रतीत्यभावप्रसङ्गात् गोत्वादिनित्यत्वन्यायसाम्येऽपि अस्यानित्यत्वे तेषामप्यनित्यत्वापाताच्च। नापि द्वितीयः तादृशमप्यनुगतमननुगतं वा स्यात् द्वितीयेऽनुगताधारप्रतीत्यसम्भवः सङ्केतग्रहापत्त्यत्वञ्च प्रथमे सामान्यवदाश्रयापरित्यागि वा स्यात् तत्त्यागि वा। आद्ये यदेव तदाधारतया प्रतीतं तत्तदाधेयं न स्यात् द्वितीयेऽपि च यदि नियामकमन्तरेण तत्स्वाश्रयं भजति च त्यजति च तदा नियमानुपपत्त्या सर्व्वदा तद्भजनत्यजनोचितप्रत्ययव्यवहारप्रसङ्गः। अथ तत्स्वाश्रयभजनत्यजनयोर्नियामकोऽस्ति तर्हि स वक्तव्यः सोऽपि कल्पयिष्यते अन्यथाधारप्रतीत्यनुपपत्तिरिति चेन्न तत्परिकल्पने यदेव भजने नियामकं स एवाधारार्थोऽस्तु कृतं पूर्वपरिकल्पितेनेति। अस्त्येवमेवेति चेन्न तस्यापि स्वाश्रयभजनत्यजननियामकस्याभ्युपगमाच्चत्वे

तस्यापि चैवं वैयर्थ्यमित्यधिकापरिकल्पने नियमानुपपत्तिः। अधिकपरिकल्पने च पूर्व्वपूर्व्ववैयर्थ्यप्रसङ्ग इति गुरुतरं व्यसनमापद्येत परस्परेण परस्परस्य नियामकत्वमिति चेत् अन्योन्याश्रयिणावर्थावपि परस्पराकर्षैकभावव्यवस्थया सुस्थीकुरु ततोऽदाश्यामस्त्वोत्तरं जात्यादयोऽपि तर्ह्येवमनुपपन्ना इति चेन्नोच्चैर्व्वक्तव्यं यदि कोऽपि शृणोति तदा महदनिष्टमस्माकं प्रकाशीकृतं स्यात्। किञ्च यत्तदाधारत्वं तत् साधारमनाधारं वा अन्त्ये स्वविशिष्टप्रत्ययं कुर्य्यात् विशेषाभावात्। आद्ये तदाधारत्वं वाच्यं स्वरूपमेव तादृशं तस्य येन स्वयं सत्तात्मनि सत्ताप्रत्ययकारिणी सत्तान्तरमन्तरेण यथा तथेदमपि विनैवाधारान्तरम् आधारप्रत्ययकारीति चेन्न भ्रान्तित्वप्रसङ्गात्। यथा विना रजतत्वं तत्प्रत्ययो भ्रान्तिस्तथैव स्यात् उपपाद्यश्चायमर्थो भेदखण्डनप्रस्ताव इत्युपरम्यते विनाप्याधाराधेयभावं स्वभावसम्बन्धेन नियामकत्वं भविष्यति। यथा विषयविषयिभावेनार्थज्ञानयोरिति चेन्न स्वभाव

सम्बन्धस्य निरस्तत्वात्। यमुदाहरसि च विषयविषयिभावं सोऽपि वक्तुं न शक्यते। तथा हि कः पुनर्ज्ञानादेर्घटादिना विषयविषयिभावः प्रकाशस्य सतस्तदीयतामात्ररूपः स्वभावविशेष इति चेन्न इच्छादिविषयाव्यापनात्। विषयित्व इति चेन्न तस्यैव निरूप्यमानत्वात्। किञ्च स्वभावः स्वधर्मी वा स्वात्मा वा तस्य विवक्षितः। आद्ये ज्ञानत्वादिकं वा साधारणमसौ तत्तद्घटज्ञाननियतो वा कश्चित्। आद्ये साधारण्यान्न विशेषतस्तदीयतामात्ररूपत्वसम्भवः। द्वितीये तु प्रतिविषयं व्यावृत्तज्ञानधर्मस्वीकारे वचनभङ्गिभेदेन साकारवादस्वीकारः। किञ्च नासौ धर्म्म उपाधेयान्तराधीनो विषयभूतघटपटादिव्यतिरिक्तोपाधिप्रतीत्यपेक्षाप्रसङ्गात्। नच घटादिरेव तथा असम्बन्धात् तथापि स तथात्वे चातिप्रसङ्गात्। नापि जातिरूपः क्वचिद्घटमात्रपटमात्रज्ञानगततया पृथग्व्यवस्थितौ सत्यां घटपटविषयैकज्ञाने सहावस्थित्या जातिसङ्करप्रसङ्गात्। प्रतिविषयं ज्ञानभेदनियमे विशिष्टज्ञानानुप-

पत्तेः एवम्भूतचित्रजात्यभ्युपगमे प्रत्येकोचित-व्यवहारस्याभावप्रसङ्गात्। अथ जातीसङ्करे-ऽपीष्यते तथापि स एव विशेषो घटज्ञानत्वा-दस्त्विति विषयासिद्धिः। अथ विषयेणापि सम्बन्धप्रतिभासनात् सोऽपीष्यते न तस्यैव सम्बन्धस्य विचार्य्यमाणत्वात् स एवासाविति चेन्न तदैक्यात् ज्ञानार्थसाधारणविषयप्रतीत्या-पत्तेः। संयोगप्रतिपत्तिवत् विषयित्वं तत् अर्थे तु विषयत्वमन्यदिति चेन्न सैव हि ज्ञातता स्यात् सा च निराकरिष्यते। द्वितीये च स्वात्मा घटपटज्ञानव्यक्तीनामिव घटज्ञानव्यक्तीनां व्यावृत्त इति तत्तद्विषयविषयिता गोचरानुगत-बुद्धिव्यवहारभङ्गप्रसङ्गः। किञ्च तदीयता-ज्ञानस्य स्वभाव इति वचनं विचारमर्हति। तदिति तावद्विषयपरामर्शः सम्बन्धितावत् स प्रत्ययस्यार्थः तदेतदन्योन्यविशिष्टम् उभयं ज्ञा-नस्य स्वभाव इति ब्रुवाणेन विषयो विज्ञानस्य स्वभाव इत्युक्तं भवतीति साधु विज्ञानवादि-निराकरणप्रकरणोपसंहरणमकारि। सम्बन्ध-मात्रं ज्ञानस्य स्वभावो न तु विषयद्वयाभय

ति। चेन्न विशेषानुपादाने सम्बन्धमात्रमिदं सर्वस्यैव स्यात् यतो न तावन्न कस्यचित्सम्बन्धस्वरूपतात्यागप्रसङ्गात् नापि नियतस्य तादात्म्यापत्तेरुक्तत्वात् नियमकासम्भवाच्च। कारणं नियामकमिति चेत् तेन नियामकेन किं भवति तदीयत्वं तस्य सम्बन्धस्येति चेत् तदेव तदीयत्वं ज्ञानस्वभावभूतसम्बन्धस्वरूपप्रविष्टमुत वहिर्भूतं धर्मान्तरम्। यदि प्रथमः तच्छब्दार्थोऽपि तर्हि स्वरूपप्रविष्ट इति ज्ञानविषययोः स एवाभेदप्रसङ्गः। द्वितीये तु तस्य धर्मान्तरस्य विषयेणाभेदः तच्छब्दार्थस्य विषयस्य विशेषणस्य तदीयशब्दार्थे विशिष्टरूपे प्रविष्टस्य स्वीकृतधर्मान्तरस्वभावतया निरुक्तत्वात्। अस्तु असौ धर्मो विषयाभिन्न इति चेत् तथापि किमसौ स्वीकृतेन स्वभावसम्बन्धेन सम्बन्धो न वा न चेत् तद्विज्ञानं न कस्यचित्सम्बन्धि स्यात् सम्बन्धश्चेत् किं सम्बन्धान्तरेण आहो स्वभावसम्बन्धेनैवासौ ज्ञानात्मकसम्बन्धसम्बन्धीयः। आद्ये तत्राप्येवं प्रसङ्गे यस्याभयेन स्वभावसम्बन्धः स्वीकृतः सा तदवस्थैवानवस्था

द्वितीयश्चेत् ज्ञानात्मकसम्बन्धसम्बन्धीय इत्यत्र विशिष्टरूपे ज्ञानरूपमपि विशेषणं प्रविष्ट-मिति पूर्वोक्तन्यायेनाधुनोक्तन्यायेन च ज्ञान-स्यैकस्यैव द्वयमपि स्वात्मेति वाग्भङ्गिभेदमात्रेण ज्ञानगोचरयोरभेदस्वीकार इति। एतेनान्य-त्रापि स्वभावसम्बन्धः प्रत्याख्यातव्यः। ज्ञानीय-फलाधारत्वं विषयत्वं तद्वत्त्वञ्च विषयित्वमि-त्यपि दुष्टम्। तथा हि ज्ञानीयं फलं ज्ञातता वा व्यवहारो वा स्यात्। आद्ये अतीतानागत-धीभ्रमाद्यर्थाव्याप्तिः न च तत्रैव फलजनने किं नियामकमिति प्रयोजकमनुगतं शक्यनि-र्वचनं तथात्वे वा तदेव विषयत्वमस्तु व्यवहा-रश्च कराकर्षणादि यदि स न सार्व्वत्रिकः नान्तरीयकस्यान्यत्रापीत्यतिव्यापकः यदीच्छादि तदा धारत्वमात्मन इति घटाद्यव्याप्तिस्तद्वि-षयत्वञ्च तद्विषयत्वमेवापेक्षते। यश्चोपेक्षां नाम व्यवहारं नानुमन्यते तन्मते कथं नोपेक्षा-प्रेक्षामुपेक्षते हानादिव्यवहारज्ञानानामेव च कथं न निर्व्विषयत्वं प्रसज्यते। अथ सर्व्वत्र हानादिव्यवहारोपगमः तदा व्यवहारज्ञानयो-

रनुपरम एव स्यात्। एतेन तत्सम्बन्धित्वं तदु-
च्यते यत्प्रतिनियतव्यवहारानुकूलस्वभावं यद्वि
ज्ञानं तत्तस्य विषयः तद्वत्त्वं विषयित्वमिति
तदपि प्रागुक्तयुक्तिं नातिवर्त्तते। अथोच्यते य
एवार्थो यस्यां संविदि भासते तद्वेद्यः स पृथक्
नेति वेद्यावेद्यस्य लक्षणमिति तदपि न विद्मः
यस्यां संविदीति किं सम्विदधिकरणम् अथ
विषयः अथ सम्बन्धिमात्रम्। नाद्यः घटादे-
स्तदधिकरणत्वानुपगमेनाव्यापनात् यथा तथा
निर्व्वचनीयज्ञानत्वाद्यतिव्याप्तेः। द्वितीयश्चा-
द्याप्यनिरूपितः कथं निरूपकः स्यात् वैपरी-
त्यापाताच्च। तृतीयश्चातिव्यापकः कारणादेरपि
तत्सम्बन्धित्वात् ज्ञानान्तरेणावभासमानत्वात्।
तयैव संविदा भासमानत्वमिति चेन्न भास-
मानत्वस्यैव निरूप्यमाणत्वात्। तन्निरूप्यत्वात्
तद्वत्त्वस्य यस्यां संविदि प्रकाशमानायां यत्
प्रकाशत एवेति चेन्न प्रकाशमानताया एव
निरूप्यमानत्वात्। सामान्यतोविषयत्वे सिद्धे
विशेषतो विषयाभिधानमिति चेन्न सर्व्वथा
विशेषानुपपत्तिद्वारा सामान्यानुपपत्तौ तद्वि-

षयप्रमात्वस्यापि सन्दिग्धत्वात्। ज्ञानाकारा-र्पणक्षमो हेतुरेव विषय इति चेन्न आकार एव केनार्पित इति विनिगन्तुमशक्यत्वात्। नह्याकारस्ततो ज्ञानस्वरूपादन्यः तत्र तथोत्पन्नानि कारणानि प्रत्येकमेव समर्थानीति कथं तेषु विशेषं विनिगमयिष्यसि यद्यपि सकलसमर्थ हेत्वनुविधानमस्ति तथापि स्फुटन्तावद्घटस्यानुविधानमिति तदेव तदाकारप्रयोजकमिष्यत इति चेन्न समस्तकारणान्तरानुविधानवतो घटानुविधानस्य प्रामाणिकत्वाविशेषेण किं स्फुटत्वास्फुटत्वाभ्यां स्यात्। स्फुटानुविधानमादायैव विषयनिरुक्तिं कुर्म्म इति चेन्न सर्वहेत्वनुविधानस्य न्यायतः स्फुटत्वात् दृश्यमानमनुविधानं यस्येति चेन्न दत्तोत्तरत्वात् दृश्यमानतैव च विषयता अनिर्व्वचनान्न शक्योपदर्शना ज्ञानकर्म्मत्वमित्यपि न ज्ञानेन कर्म्मणः सम्बन्धस्य निर्वक्तव्यत्वात् तन्निरुक्तिभङ्गश्चेश्वराभिसन्धौ ज्ञाततावादे द्रष्टव्यः विना सम्बन्धान्तरं यद्विशेषणज्ञानं सविषयः तेन विना सम्बन्धान्तरं ज्ञानविशेष्यं विषयः

विशेष्यञ्चेदं यद्विशिष्टनामकं तत्त्वान्तरं यद्गतं धर्म्मं गृह्णातीति। अथोच्यते यद्गतधर्म्मं गृह्णातीत्येतावन्मात्रमेव विवक्षितं गृह्णात्येवेति वा। आद्ये दण्डस्यापि विशेष्यत्वापातः तद्गतस्यापि सत्त्वादेर्द्धर्म्मस्य ग्रहणात्। नापरः सत्त्ववति हि व्यभिचारिणो धूमस्याविच्छिन्नमूलत्वादिविशेषणं तद्विशिष्टञ्च तत्त्वान्तरं नच विशेष्यस्य धर्म्मं व्यभिचारितां गृह्णाति। अयोद्वाविरतगतिविशिष्टस्याविच्छिन्न मूलता विशेषणं नच तथाभूतस्य व्यभिचारिता धर्म इत्युच्यते। मैवम्। प्रथमविशिष्टः किं व्यभिचारी न वा आद्ये स एव दोषः द्वितीये विशेषणान्तरान्तर्भाववैयर्थ्यं प्रथमविशिष्ट एव च तद्दोषावसरः। अथ यद्धर्म्मविशिष्टस्य तद्विशेषणं तद्धर्म्मं गृह्णाति न सर्वं नच व्यभिचारिताविशिष्टस्य तानि विशेषणानीति चेन्न तत् किं धूममात्रं न व्यभिचारि ततश्च व्यभिचारिताविशिष्टस्यैव तस्य तानि। तथा भवतु व्यभिचारिताविशिष्टस्य तद्विशेषणं परं सा न विशेष्यकोटिरिति चेन्न अद्यापि विशेष्या-

ज्ञानात्। किञ्च तद्विशेषणमिति तत्सम्बन्धि-मात्रं वा विशेषणतया वा सम्बन्धि। आद्येऽति-प्रसङ्गः द्वितीये तु तथैवान्योन्याश्रयादि किञ्च विशेष्यत्वलक्षणो यस्तद्गतोधर्म्मस्तं गृह्णाति न वा आद्ये अतिव्याप्तिः द्वितीयें गृह्णात्येवेति नियमोऽसिद्धः। किञ्च सत्समवायो ज्ञानस्येत्यत्र भवति सत्समवायस्य ज्ञानं विशेषणं सम्बन्ध-मन्तरेणैव नच विषयः। नच गुणगुण्यादि-विशेषणविशेष्यभावे यः सम्बन्धान्तरमन्तरे-णत्युक्त्वा व्यवच्छेद्यतां नीतः स एवायं समवाय इति कथं न व्यवच्छेद्यतां प्रतिपत्स्यते यतोऽत्र तस्यैव विशेषणविशेष्यभावादन्तरत्वासिद्धि-रिति तस्मात् सम्बन्धमन्तरेण ज्ञानं विशेषणं यस्येत्युक्तं तत्र ज्ञानं सम्बन्धमनपेक्ष्य स्वभावत एव यथार्थस्य विशेषणं तथा समवायस्यापीति न कश्चिद्विशेष इति साधूक्तं सत्समवायो ज्ञान-स्येत्यत्र ज्ञानविषयता समवायस्य स्यादिति। नच तत्र स एव समवायः सम्बन्धः अत्रापि विशेषणविशेष्यस्यैव सम्बन्धत्वात्। नासौ सम्ब-न्धिनोऽन्यस्तादृशस्य व्यवच्छेद्य इति चेन्न सम-

वायेऽपि तुल्यत्वात् संयोगसमवायौ व्यवच्छि-
द्येते इति चेन्न तथापि ज्ञानाभावेऽपि प्रस-
ङ्गात् । न तत्र ज्ञानं विशेषणं किन्तूपलक्षण-
मिति चेन्न अतीतानागतयोरविषयत्वापत्तेः ।
भावे चिन्तेयमिति चेन्न अभावस्य विषयत्वा-
पातात् ज्ञानादन्यज्ज्ञानीयञ्च यत्कारणादि
तत्रापि प्रसङ्गादिति किं विस्तरेण ।

न च ज्ञानकारतायां गोचरस्य नास्त्येव
ज्ञानगोचरयोर्भेदः प्रतीतिविरोधात् भेद-
मनिच्छता च स प्रतिषेद्धुमप्यनर्हइति । वक्तव्य
स्तर्हि कोऽसौ भेदोनाम । स हि स्वरूपं वा
स्यात् इतरेतराभावो वा धर्मान्तरं वा । नाद्यः
भिन्ने अभिन्नभ्रमानुपपत्तिप्रसङ्गात् भ्रान्त्यापि
धर्मिस्वरूपावगाहनात् । अन्यथा कस्याभेदं
सा भ्रान्तिरुल्लिखेत् । ननु निःसम्बन्धित्वेन
व्यवस्थिते तरुदारुप्रभृतौ नानाधारोऽन्य एवा-
वयव्यारोप्यते येषु त्वारोप्यते ते भेदेनैव
भान्ति किन्त्वनारब्धावयविषु तेष्वारब्धावय-
वितया विभ्रम्यते । मैवम् तेषामनुदाहरणी-
कृतत्वात् । अतस्मिन् स एवायमिति प्रत्य-

भिन्नाभासाद्यर्थानां दृष्टान्तत्वेनेष्टत्वात् तत्रापि धर्मान्तरारोपाभ्युपगमे तादात्म्याभावस्य संसर्गाभावप्रवेशापत्तेः। न चैवमप्येष्टव्यमेव तथापि स्वरूपभेदग्रहे तत्राभेदस्य धर्म्यंशस्याप्यग्रहात्क्यारोपत्वात्। नापि द्वितीयः प्रतीतावन्योन्याश्रयप्रसङ्गात्। प्रतियोगिरूपत्वेनाप्रतीतावधिकरणप्रतीतिः अधिकरणस्वभावत्वेनास्मृतौ प्रतियोगिस्मृतिश्च तद्ग्रहणकारणमतः केतरेतराश्रय इति चेत् मैवम् एवं हि सति कुम्भः पटो न भवतीत्यत्र यथैव तस्याभावस्य प्रतियोगितया पटोनिषिध्यते तथा कुम्भोऽपीति सोऽपि कुम्भात्मतया निषिद्धः प्रसज्यते वस्तुतोऽन्योन्याभावस्य कुम्भप्रतियोगित्वेऽपि कुम्भस्यापटत्वनिरूपणकाले कुम्भस्य प्रतियोगिता नापेक्ष्यते किन्त्वाश्रयतैवेति कुम्भाप्रतिक्षेपः। पटस्य तु प्रतियोगितैवापेक्ष्यते नत्वाश्रयतेति कुम्भवत् पटस्यापि न संग्रहापत्तिः। यद्यप्यन्योन्याभावस्योभयप्रतियोगिता तथाप्यन्या कुम्भाश्रयता अन्या पटाश्रयता अन्या कुम्भप्रतियोगिता अन्या पट-

प्रतियोगिता तेनान्योन्याभावस्योभयप्रतियोगि-
कत्वे चोभयाश्रितत्वे च नोभयोरपि संग्रह-
प्रतिच्छेदविरोधापत्तिः । नापि च प्रतियोगि-
त्वस्यानुयोगिनोऽभेदोपजीवनेऽन्योन्याश्रयानुपजी-
वने च स्वस्मादपि भेदग्रहापत्तिः प्रसज्येत ।
यतः स्वर्ध्यमाणस्य प्रतियोगिता अनुभूयमानस्य
चाश्रयतेति एतावन्मात्र एवोक्ते स्वस्मादपि
भेदग्रहानापत्तिः । न चैवं स एवायमित्यत्रापि
भेदग्रहप्रसङ्गः वास्तवतत्त्वासत्त्वाभ्यां विशेषा-
दिति । नैवं तथा हि किमधिकरण प्रतीति
रधिकरणतया प्रतीतिः उत वस्तुगत्या अधि-
करणस्य स्वरूपेण सा विवक्षिता । आद्ये किं
मायाधिकरणतया घटादेः प्रतीतिस्तस्य कारणं
न तावन्योन्याभावाधिकरणतया दण्डाप्रतीतौ
दण्डाधिकरणतायां इव तदप्रतीतौ तदधिक-
रणतायाः प्रत्येतुं पूर्व्वमशक्यत्वात् विशिष्टप्र-
तीत्या विशेषणस्यावश्योल्लेख्यत्वात् विशिष्टस्य च
विशेषणमूर्त्तित्वात् । नापि यस्य कस्यचिदधि-
करणतया प्रतीतिस्तत् कारणं यत्र भिन्ने
अभेदभ्रमस्तत्र धर्म्मिणः सत्ताद्याधारतया

प्रतीतावपि तदनुत्पत्तेः। न तन्मात्रात्तदुत्पत्तिः अपि तु प्रतियोगिस्मृति सहितात् सा च तदा नासीति तदनुत्पत्तिरिति चेन्न प्रतियोगिस्मृतिरपि किं प्रतियोगितया स्मृतिः उत वस्तुगत्या प्रतियोगिनः स्वरूपेणेति विकल्पग्रस्तत्वात्। आद्ये किमन्योन्याभावप्रतियोगितया यस्य कस्यचित् प्रतियोगितया वा। नाद्यः अन्योन्याभावाप्रतीतौ तदनुपपत्तेः पूर्व्ववत्। नापि द्वितीयः तस्य वस्तुगत्या भिन्नस्याभिन्नतया भ्रमविषयी कृतस्य स्वदेशेतरदेशादावसत्त्वेन प्रतीयमानत्वे स्वाभावप्रतियोगितया प्रतीतावन्योन्याभावप्रतीत्यनुत्पत्तेः। प्रतियोग्यनुभूतिः सा न स्मृतिरिति चेन्न स्मृतित्वस्याप्रयोजकत्वात् अन्यथानुभूयमानयोरन्योन्याभावाप्रतीति प्रसङ्गात्। अत्रान्तरा स्मृतिकल्पनया नान्योन्यात्मानाविमाविमावित्यनुभवबाधितया प्रयोजकत्वेऽपि वा स्मृतित्वस्य योऽसौ तत्र नासीत्सोऽयमिति स्मर्य्यमाणाभावप्रतियोगिकत्वेऽपि वस्तुगत्या भिन्नस्याभिन्नतया भ्रमेणोल्लिख्यमानस्यान्योन्याभावप्रतीत्यनुदयात्। दोषाभा-

योऽपि हेतुः स भ्रमोदाहरणे नास्तीति चेन्न पूर्वदृष्टे स्मृतिमत्ता ततो वस्तुगत्वान्यस्यैवा-नन्तरदृष्टस्य पूर्वदृष्टत्वात् भिन्नमभिन्नं वेति अनिरूपितस्यापि सम्भवेन तवेतरेतराभाव-बुद्ध्यापत्तेः । बुध्यतएवेति चेन्न पश्चात्तत्संश-यस्य दर्शनात् विशेषधीरपि तत्र हेतुरिति चेन्न विशेषत्वस्यान्योन्याभावनिरूपणं विना दुर्निरूपत्वात् । एतेन वस्तुगत्या प्रतियोगिनः स्वरूपेण स्मृतिः सहकारिणीत्यपि व्युदस्तम् वस्तुगत्याधिकरणस्य स्वरूपेण प्रतीतिरित्यपि भिन्नस्याभिन्नतया प्रतीयमानस्यान्योन्याभाव-वत्तया ग्रहणप्रसङ्गात् । नापि तृतीयः अभा-वस्य निर्द्धर्म्मकतापत्ते तस्य विश्वाभिन्नत्वप्रसक्तौ विश्वस्यात्यभावरूपत्वेन निर्द्धर्म्मकतया धर्म्म-लक्षणान्योन्याभावविरहेण एकरूप्यापत्तेः अ-भावे धर्म्माभावात् । स्वरूपमेव भेद इति चेत् योऽसौ भेदस्तस्य स्वात्मा स किं कस्मादपि भेदः उत निष्प्रतियोगिक एव न तावन्निष्प्रतियो-गिक एव प्रमाणाभावेनासत्त्वप्रसङ्गात् । यो-ऽसौ भेदव्यवहारोऽस्ति स कस्मादपि न नील-

व्यवहारनिष्प्रतियोगिकः स च निष्प्रतियोगिको नोपपद्यते निष्प्रतियोगिकोऽपि वा यद्ययं सप्रतियोगिकव्यवहारं करोति प्रतियोगिनियमो न स्यादिति स्वस्मादपि भेदव्यवहारं कुर्यात्। स्वस्माद्भेदः कथं सम्भवतीति चेत् तत् किं भिन्नाद्भेदः नन्वेवमनवस्था स्यात् नापि प्रथमः वक्तव्यं हि तद्यस्मादसौ भेदः न तावत्सर्वस्मात् स्वात्मतोऽपि भेदप्रसङ्गात्। नापि घटादेः घटादिना सह तस्यावध्यवधिमद्भावो योऽसौ सत्त्वर्थान्तरं वा स्यात् स्वरूपमेव वा। आद्ये तस्यापि भेदावधित्वेन तत्रापेवमनुयोगे यद्येतदेवोत्तरमनवस्था स्यात्। अथ तत्र स्वरूपमेव तर्हि प्रथमस्य तथाभावे प्रद्वेषः किन्निबन्धन इति प्रथमतएव स्वरूपं वाच्यं तदपि न तथा हि यदि घटादिभिः सार्द्धम् अवध्यवधिमद्भावः सम्बन्धोऽस्य स्वरूपं प्रतियोगिना सार्द्धं तर्ह्यभावस्वरूपस्यास्य निषेध्यनिषेधभावलक्षणः सम्बन्धः स्वरूपं न स्यात् स्वरूपस्यैकत्वात्। अनयोश्च सम्बन्धयोर्भिन्नत्वात् न हि यदेव प्रतियोगिनः सका-

साधिकरणत्वं तदेव तन्निषेधत्वमिति सम्भवति ततो व्यतिरिक्तस्य निषेध्यसाधारणत्वात् निषेध्यनिषेधभावस्य नियतवस्त्वपेक्षत्वादिति एवं कार्य्यकारणभावादौ स्वभावसम्बन्धान्तरेऽपि वाच्यम् ऊहनीयश्चान्यत्रापि स्वरूपभेददोष एषः । किञ्च धर्मान्तरं भेद इति ब्रुवतः कोऽभिसन्धिः किं घटत्वादय एव भेदः उत भेदो नामान्य एवैकः कश्चिद्धर्मः । आद्ये घटत्वादीनां प्रतियोगिकत्वप्रसङ्गः भेदस्य प्रतियोगिकत्वात् न च घटत्वादयस्तथा पटाद्यनपेक्षतयैव प्रतीतेः । यदा घटाद्यपेक्षया प्रतीयते तदा भेदव्यवहारं कुर्व्वन्तीति चेन्न प्रतीतौ कस्य पटाद्यपेक्षेति वाच्यं किं घटत्वादेरुत धर्मस्य कस्यचित् । आद्ये पटापेक्षामन्तरेण घटत्वप्रतीत्यनुत्पत्तिप्रसङ्गः । न हि यदन्तरेण यदुत्पद्यते तत्तत्कारणं नाम वह्निविवावान्तरजातिभेदे कारणभेदस्य चरितार्थयितुमशक्यत्वात् । साक्षात्कारित्वादिना सह परापरभावानुपपत्तेः जात्योः परापरत्वसङ्करभिच्छतामपि मते पञ्चम्यावधिभावः प्रतिपाद्य-

मानः केन समममन्वियात् घटत्वस्यावधिघटि-
तत्वे तथैव परं प्रतीत्यापत्तेः। तद्धर्मस्य तथा-
त्वमिति चेन्न तथा हि न द्वितीयः स एव सा-
पेक्षप्रतिपत्तिर्भेदो न तु घटत्वादिः। घटत्वा-
देश्च स भेदः स्यात् तद्धर्मकत्वात् घटादेस्तु
भेदपर्य्यनुयोगे तदभिधानमसङ्गतं कथञ्च
भिन्नैरनुगतव्यवहारः स्यात्। तथापि तथा
सति वा किन्न तैरेव सदादिव्यवहारः स्यात्।
नापि द्वितीयः अनभ्युपगमात् सर्वपदार्था-
नमन्तर्भावप्रसङ्गत्वात् स्वात्मनोऽवृत्तरवृत्तिव्या-
मनुपपत्तेश्च दृष्टशाञ्चोपाध्यालीढ़वैचित्र्याणां
जात्या समर्थने सर्व्वोपाध्युपधानानां जा-
त्यैव समर्थनं स्यात्। ननु घटत्वादय एव
भेदा घटत्वादिज्ञानविशेषेऽपि च प्रतियोगि-
ज्ञानसहकारिवशाद्विचित्रव्यवहारोपपत्तिरिति
न व्यवहारसत्यत्वार्थं वास्तवानुगतविशेषस्या-
वश्यस्वीकर्त्तव्यत्वे तथैव पर्य्यनुयोगानुवृत्तेः।
अनन्तभेदपरम्पराभ्युपगमे तत्क्रमज्ञेयतायां
प्रतीत्यपर्य्यवसानात्। तद्युगपज्ज्ञायतामनन्तं
सहयतया कस्यचिदन्यभेदस्यान्यदीयतयापि

ग्रहणसम्भववादिना सर्व्वत्र प्रामाण्यानाश्वास-
प्रसङ्गात् सर्व्वप्रतीति नियमानङ्गीकारे चाप्र-
तीतसत्त्वे प्रमाणाभावात् । जिज्ञासायां तस्य
तस्यापि ज्ञेयत्वे तद्बुद्धीनां भेदबुद्धित्वात्तदर्थं-
मनुतत्वस्याप्यनुपपत्त्या तेष्वैकजात्याद्यभ्युप-
गमे तद्भेदेऽपि तदङ्गीकारे परस्पराश्रयाश्रयि-
भावप्रसङ्गात् । एवं सत्तादीनामानन्त्यस्वी-
कारे द्रष्टव्यम् । किञ्च घटत्वादेर्भेदत्वेऽवधि-
भूतपटत्वादिसापेक्षप्रतिपत्तिकतायां घटत्व-
वत् पटत्वस्यापि भेदरूपस्य भेदावधिप्रतिपत्ति-
सापेक्षतयाऽवधेश्च घटत्वादित्वेन घटत्वादि-
प्रतीत्यपेक्षायामन्योन्याश्रयत्वप्रसङ्गः । भेद-
रूपत्वे घटत्वादेरवध्यपेक्षा न तु स्वरूपमात्र-
प्रतिपत्तौ स्वरूपमात्रेण चावधित्वं तत् कुत
एवमिति चेन्न भेदरूपता यदि तस्य स्वात्मैव
तदा स्वरूपमात्रप्रतिपत्तौ नावध्यपेक्षेति शू-
न्यञ्च वचनम् । अथ धर्मान्तरं तदा स एव
भेदोऽस्तु कृतं तद्वत्तया घटत्वादेर्भेदरूपतेति
प्रक्रियाकल्पनया । अस्तु स एव धर्मान्तरं भेद
इति चेन्न दूष्यत्वात् । अथापि स्वरूपादितय

मिदं भेद इति कथं सङ्गच्छते तद्व्यवहारस्यैका-कारस्य नानानिमित्तत्वे गोत्वाद्यनुगताकार-प्रतीतेऽपि कथमेकनिमित्तसिद्धौ प्रामाण्यं व्यभिचारात्। सामान्यविशेषैरेव परसामान्य-बुद्धिव्यवहारोपपत्तौ तत्कल्पनानुपपत्तेः। किञ्च भेदे भेदान्तरमस्ति न वा आद्येऽन-वस्था द्वितीये तदभाव एव स्यात् धर्मिण्येव तत्प्रवेशात्। भेदस्वभावत्वात् स्वात्मन्येऽपि स्वयमेव तद्व्यवहारमयं करोति सत्तेव तद्व्यव-हारमिति चेन्न यदि स्वस्मादभिन्नः स्वभेद इति च स्वस्मादित्यवधेरावधिभावस्वरूपः स्वयं भेदो ऽन्यस्माच्च स्वस्य तदास्य भेदस्य स्वात्मप्रतियोगि-त्वेन स्वाश्रयत्वेन चाङ्गीकारे स्वस्मादपि स्वयं भिन्नः किं नाङ्गीक्रियते विरोधाभावात्। स्वी-क्रियेताप्येवं यदि तथा प्रतीतिर्व्यवहारो वा स्यादिति चेन्न अस्त्यपि शब्दाभासादेस्तथा प्रतीतिराभासशब्दव्यवहारश्च। सत्यौ प्रतीति व्यवहारौ स्वीकारकारणं न च तौ स्वात्मन एव स्वस्माद्भेदविषयौ स्त इति चेन्न स्वात्मा स्वस्यै-वाधिकरणमवधिश्चेत्यपि तर्हि न सत्या प्रतीतिः

सम्भवति न वा व्यवहारस्तत्कथमित्यमङ्गीकुरुषे। न वयं स्वात्मा स्वाधिकरणं स्वावधिर्वेत्यभ्युपगच्छामः किन्तु धर्मान्तरे तत्प्रतियोगिके तदाधारे वा स्वीकृते यौ बुद्धिव्यवहारावुपपद्येते तावनवस्थाभयाद्धर्मान्तरमन्तरेणैव स्वभावाद्भेदः करोतीति ब्रूम इति चेत् तर्ह्यन्यत्र यादृशी प्रतीतिर्धर्मान्तरविषया तादृश्येवात्र विना धर्मान्तरमुत्पद्यत इति भ्रान्ता स्यात्। यस्य च स्वभावस्य बलेनेदृशी सा जायते स दोषः स्यात् यथा सत्यरजते रजतप्रतीतिरजतत्वादुत्पन्ना अन्यत्र विना रजतत्वं जायमाना भ्रान्ता सा भवति। यस्य च सामर्थ्यात् सा तादृशी जायते स दोष इत्युच्यते तत्र रजतत्वं नास्ति अत्र धर्म्मिरूपोऽपि भेद एव सन्नवलम्बनमिति चेत्। मैवम्। भिन्नप्रतीतिर्व्विशिष्टविषया भेदतदाश्रयरूपोभयवस्तुविषयान्यत्र यादृशी सत्याङ्गीकृता ततो मात्रयाप्यन्यूनार्थीया इह जायमानाया यदि इयं विषयं नाङ्गीकुरुषे तदा ब्रह्मणापि भ्रान्तत्वं दुर्व्वारम् अथाङ्गीकुरुषे अनवस्थाप्रसङ्गः।

अथ तदुभयविषयव्यतिरेकेणैव सात्र सत्या अन्यत्र तर्हीतोऽन्याद्यविषया मिथ्या स्यादित्यलं पल्लवेन ।

यत्तु सत्यैवेत्युक्तं तत् कटकगवोदाहरणमनुहरति यतः सत्ताप्यमुना दूषणेनास्माभिः खण्डनीया । यत्पुनरभिधीयते किमेतैर्भेदखण्डनवादिभिरभिहितं भवति किं भेदज्ञानमेव नास्ति सदपि चानित्यम् अनित्यमपि वा निर्हेतुकं सहेतुकमपि वा निर्विषयं सविषयमपि वा बाध्यमानविषयम् । तत्र प्रथमः सर्व्वतोविरोधादनुत्तरः । द्वितीयः सुषुप्तावस्थानुरोधादुपेक्षणीयः । तृतीयोविरोधादेव । चतुर्थस्तु भेदोल्लेखादेवत्याज्यः । पञ्चममभिरुच्यते किमेतेष्वन्यतमो विषयः तदन्यो वा द्वितीये किमेताभिर्व्यधिकरणानुपपत्तिभिस्तस्य बाध्यते एवं हि चौरापराधेन व्यक्तमयं माण्डव्यनिग्रहः । अथान्यतमात्मा तत्रापि यदि धर्मान्तरमेवेति तच्चं तदानवस्थाभिया तदधिकः प्रवाहस्त्यज्यतां तस्य कुतस्त्यागः नह्यनवस्थाप्रतिभासमानमर्थं निवर्त्तयति किन्तु प्रवाहं

परिहारवति गन्धे गन्धान्तरवत् । अथेतरेतराभावमेव भेदज्ञानमालम्बते तदापि कात्माश्रयः तेन हि भेदज्ञानमेव न स्यात् । अस्ति च तत्ततो हेत्वन्तरमाक्षिपेत् न तु स्वात्मनि स्वयमहेतुत्वे स्वयमेव निवर्त्तेत अविद्यावस्मादिति चेत् किञ्चातः नह्यविद्येत्येनात्माश्रयनिवृत्तिः तथा सति घटादयोऽपि कुलालादिनिरपेक्षाः स्वयमेव भवेयुः । अथात्माश्रयदोषहततया तन्न तस्यैव कारणं यतो यतः कुतश्चित्तस्य जन्म तच्च दुर्निरूपमतोऽविद्येत्युच्यत इति विचारार्थः । नास्ति तर्हि विवादः न च तदपि दुर्निरूपं प्रतियोगित्वेनाप्रतीतावधिकरणस्वभावत्वेनाधिकरणप्रतीतिः अधिकरणस्वभावत्वेनास्फूर्त्तौ प्रतियोगिस्फूर्त्तिश्चेतरेतराभावग्रहणकारणमिति निरूपणात् । अथ स्वरूपमेव भेदप्रतिभासस्य विषय इति तत्त्वं तथापि सहप्रयोग एवानुपपन्नः परिह्रीयतां भेदेन तु किमपराद्धम् सोऽपि दृश्यत इति चेत् सत्यं नैमित्तिकस्तु स्यात् न स्वरूपतः न हि घटमानय पटमवलोकयेत्यादौ भेदपदमपि प्रेक्षा-

वानुपादत्वे व्याख्यायान्तु मूढ़प्रबोधनार्थं घटः कुम्भ इति वत् सहप्रयोगेऽपि न दोषः तथापि कः परमार्थः। यथायथं त्रयमपि घटस्य हि घटाद्यात्मना प्रतीतिः अपटाद्यात्मना च प्रतीतिस्ततो वैयिध्यप्रतीतिश्चेत्यनुभवसिद्धम्। तत्वाभावस्य प्रथममात्रम् अभावान्तरधर्मान्तराभावात् सामान्यादिषु त्रिषु द्वयं धर्मान्तराभावात् द्रव्यादित्रिषु त्रयं त्रयस्यापि सम्भवात्। भवति हि पटोऽयं न घटः तन्तुमयश्चेति गन्धोऽयं न रूपं सुरभिश्चेति गतिरियं नोत्क्षेपणं तिर्य्यक् चेति। लक्षणन्तु स्वरूपभेदस्य नाद्रूप्येणाप्रतीतौ प्रतीतिः इतरेतराभावस्य त्वबाधितः समानाधिकरणो निषेधप्रत्ययः वैधर्म्यस्य तु विरोधः सचैकधर्मसमावेश इत्येवमादिगिति। अत्रोच्यते तया हि यत्तावत्पृष्टं किमेतेष्वन्यतमात्मास्य विषयः तदन्योवेति तन्निर्व्वचनवादिनि शोभते नास्मासु प्रतिभासमानोऽयं भेदः स्वरूपादिपक्षान्तर्भावान्तर्भावाभ्यां वा सदसत्त्वाभ्यां वा अन्येनापि धर्मेण येन केनचिन्निरुच्यमानोऽन्वये व्यतिरेके च

बाध्यतामेति तेन सर्व्वेणानिर्व्वचनीय इति
ब्रूमः। एतच्च न केवलं भेदस्यापि तर्हि जगत
एव अनिर्व्वचनीयवादस्यायं यथा तथोदितं
प्राक् यदप्युक्तमथान्यतमेत्यादि गन्धोगन्धान्तर-
वदित्युक्तम् तदपि न साधु यथा युक्तैरकस्वी-
कारस्तथैव प्रवाहस्वीकारस्य दुर्व्वारत्वात्।
तत्र यदि प्रवाहस्वीकारे तस्यात्मसाधकत्वं
स्वीक्रियते एकस्वीकारेऽपि स्यात् अविशिष्ट-
लक्षणत्वात् अतएव प्रतिभाससमानत्वादेकस्वी-
कार इत्ययुक्तम् एकप्रतिभासिकाया युक्तेः सर्व-
साधारण्यात्। न हि प्रत्यक्षादेव जायमानः
प्रतिभासः प्रमाणं नानुमानादेरित्यत्र युक्ति-
रभ्युपगमो वा न चानवस्थाप्रसञ्जिका युक्ति-
रनुमानादेरन्या नाम तर्कस्यापि व्याप्तिमूलत्वं
सर्व्वञ्चानुमानच्छायामापद्य दूषणमपि प्रव-
र्त्तत इति भवत एव व्युत्पादनात् अतोऽनवस्था-
प्रसञ्जिकाया युक्तेर्दोषो वा वक्तव्यः त्यक्तव्यो
वा स्वपक्षः। प्रवाहस्वीकारवदेकस्वीकारे ना-
नवस्थेति चेत् तत् किमनवस्थाभावविशि-
ष्टायास्तस्यायुक्तेः साधकत्वं मन्यसे एवं तर्हि

द्वितीयमात्रस्वीकारे नानवस्थेति द्वितीयस्वी-
कारप्रसङ्गः ओमिति चेत् परार्द्धपर्य्यन्तं प्रवाह-
स्वीकारं को वारयिता नैतावन्मात्रेण तुष्यति
भवान् परार्द्धादप्यधिकमेकादिकं किं नाभ्युप-
गच्छत इत्यपि भवता वक्तव्यमेव तथा च सैवा-
नवस्थेति चेत् सत्यं तस्मात्तु भयात् कीदृश-
मभ्युपगच्छतामिति निपुणं मन्त्रयामहे । द्व्या-
दिकं परित्यज्यतामिति चेत् एकस्मिन्नास-
कीदृशोऽनुग्रहः येनानवस्थाप्रवाहनिवेशाविशे-
षेऽपि द्व्यादिकमुपेक्षितमेकन्तु रक्षितम् । द्वि-
तीयमादायानवस्थेति चेत् द्वितीयेऽपि यदि
भवतोऽनुग्रहः स्यात् तृतीयमादायानवस्थेत्यभि-
धाय सोऽपि रक्षितः स्यात् तावेतौ च भवतो-
रागद्वेषौ निःश्रेयसाय यतमानस्य मानसमा-
स्कन्दमानौ न कल्याणोदर्कौ तर्कयामि । गन्वे
गन्वान्तरप्रसञ्जिका न च युक्तिरस्ति तदु-
क्तित्वे वा का नो हानिः तस्याप्यस्माभिः खण्ड-
नीयत्वात् यदप्येतदित्यादिनिरूपणादित्यन्तं
तदप्ययुक्तम् तथा हि इतरेतराभावज्ञानं भेद-
व्यवहारहेतुं मन्यते तस्य पञ्चोनोपपन्न

आत्माश्रयप्रसङ्गादित्येवं प्रमाणस्य न किञ्चिद्-
वाधकमुक्तं स्यात् प्रतियोगिरूपत्वेनेत्यादि
समाधानञ्च प्रागेव दूषितम्। अथ स्वरूपमेवे-
त्यादि न दोष इत्यन्तं यदुक्तं तत्रास्मादनुक्त-
दोषदूषणमित्युपेक्षितम्। यदपि तथापि क
इत्यादि तिर्य्यक् चेत्यन्तं तदपि गर्त्तवार्त्तगोधा
मांसविभजनमनुहरति पञ्चनयस्याप्युक्तयुक्तया-
च्छादितस्य दर्शयितुमशक्यत्वे न तद्विभाग-
व्यवस्थितेरवसरनिरस्तत्वात्। यच्च स्वरूप-
भेदस्य लक्षणमुक्तं ताद्रूप्येणाप्रतीतौ प्रतीति-
रिति तदप्यवद्यम् यदेकमेव वस्तु भ्रान्त्या
भिन्नमिति प्रतीयते तत्र ताद्रूप्येणैकस्यैकरूप-
तया प्रतीतिर्नास्ति नास्ति च प्रतीतिर्न च स्व-
रूपभेद इत्यतिव्याप्तिः। ताद्रूप्येणेत्यस्य धर्मा-
न्तररूपभेदासङ्कीर्णोदाहरणार्थत्वात् प्रतीति-
रभ्रान्ता विवक्षितेति चेत् स्वरूपप्रतीतेस्त-
त्राप्यभ्रान्तत्वात्। यच्च स्वरूपमात्रेण प्रतीयते
वस्तु न तत्ताद्रूप्येणैकरूप्येण न च नानात्मतया
वस्तुगत्या चैकमेव तत् तत्रापि स्वरूपलक्षण-
भेदः स्यात् नास्त्येवेह समुदाहरणं ताद्रूप्या-

ताद्रूप्याभ्यामेकस्यावश्यं प्रतीतिरिति चेन्न प्रतीतिकलहानवकाशात्। भवति हि यत्त्वया तत्र दृष्टं तत् किमेकमनेकं वेत्यनुयुक्तो नायं विशेषोमया शङ्कितोजिज्ञासितो वा स्वरूपमात्रन्तु प्रतीत्याहमुदासीनोऽभूवमित्यभिधत्त इति। ननु तदपि स्वरूपं भेद एव कस्मादपि तत् कथमुक्तदोषावता इति। मैवम्। एवं हि ताद्रूप्येणाप्रतीताविति व्यर्थं स्यात्। प्रतीतिमात्रं लक्षणं वक्तव्यं यत्प्रमेयं तत् कस्मादप्यवश्यं भिन्नमिति एकस्यैव स्वस्माद्भेदप्रसङ्गनिराकरणार्थमपि ताद्रूप्येणाप्रतीतावित्युक्तं तच्च खण्डितमिति। ताद्रूप्यमन्यरूपत्वं विवक्षितमिति चेन्न तदा हि तदानुपस्थितपरामर्शवत् अन्यस्य स्वरूप भेदत्वे आत्माश्रयः सर्व्वस्वरूपाणां लक्ष्यत्वात् अन्योन्याभावत्वे चान्योन्याश्रयः वैधर्म्ये चैकं यदपीतरेतराभावस्य लक्षणमबाधितः समानाधिकरणोनिषेधप्रत्ययः। एतदप्यशोभनं समानाधिकरण इत्यादि भाषायाः कथं कथमपि तात्पर्य्यगवेषणेऽपि समानाधिकरणयोर्निषेधस्तत्प्रत्यय-

विषयोऽन्योन्याभाव इति पर्य्यवसाने समानाधिकरण इति किं तुल्याश्रयः उतैकाश्रयः उत तादात्म्यप्रतियोगिकः उताधिकरणभूतपदार्थवाचिशब्दविशेष्यभावव्यवस्थितपदाभिधेयः उतान्यदेव। तत्र न प्रथमः तुहिनमयूखे प्रियामुखे च न दूषणकरणस्यापि सम्भव इति प्रत्ययस्यापि दर्शनात्। तत्र मुखचन्द्रयोरन्योन्याभावोऽस्तीति चेन्न तस्य सत्त्वेऽप्युक्तप्रत्ययस्य तदविषयत्वात् मास्तु तद्विषयो लक्षणन्तस्यैतस्य तदविषयत्वेऽप्यदुष्टमिति चेत् कीदृशं तर्हीदं लक्षणं न तावत्समानाधिकरणयो निषेधस्तत्प्रत्ययोयस्तस्य यो विषयः सोऽन्योन्याभाव इति नापि स एवाऽन्योन्याभाव इति नापि यत्र समानाधिकरणोनिषेधप्रत्ययस्तत्र योऽस्ति सोऽन्योन्याभाव इत्यस्तु तद्धर्मस्य सर्व्वस्यान्योन्याभावत्वापातात् समानाधिकरण वैयर्थ्यप्रसङ्गाच्च। एतेनैकमुदाहरणमादाय द्वितीयोऽपि निरस्तः। नापि तृतीयः तादात्म्यप्रतिसन्धानव्यतिरेकेण तत्प्रतियोगिकत्वस्य प्रत्येतुमशक्यतया तन्निर्व्वचनप्रसङ्गात् तच्चाशक्यं तथा

हि तदेकत्वं वा भेदाभावो वा स्वरूपत्वसम्भावितं तस्य भेदत्वोपगमात् तस्मिन् दृष्टेऽपि तत्त्वेति तादात्म्यसंशयानवकाशापत्तेः। आद्योऽपि संख्याविशेषो वा धर्मान्तरं वा। नाद्यः गुणादौ तदभावप्रसङ्गात् प्रथमे क्षणे कार्य्यद्रव्यस्यैकस्यापि स्वातादात्म्यप्रसङ्गात्। वैशेषिकमतव्युत्थाने चैकत्वे तदभावप्रसङ्गात् उपाधिभिन्नावलम्बि च तादात्म्यं कथं स्वरूपमात्रावलम्बेनैकत्वीकर्त्तुं शक्यं विचित्रप्रतिपत्तिकत्वात्। नापि द्वितीयः तस्यापि धर्मान्तरापेक्षयानवस्थापातात् अनपेक्षायां स्वादात्म्यप्रसङ्गात्। नापि द्वितीयः न हि भेदस्याभावो भवन्नन्योन्याभावस्यैव स्यात् अन्योन्याभावस्य च तत्प्रतिक्षेपात्मकत्वात् तेनाप्यन्योन्याभावप्रतिक्षेपात्मना भवितव्यं परस्परप्रतिक्षेपात्मत्वान्निषेध्य निषेधयोः तथा च सत्यन्योन्याभावप्रतीतिमन्तरेण तन्निरूपणाशक्यं निषेध्यप्रतीतिसापेक्षत्वान्निषेधबुद्धेरित्यन्योन्याश्रयः। नापि तुरीयः निर्घटं भूतलमित्यत्रापि प्रसङ्गात्। नापि पञ्चमः समानाधिकरण इति

